ब्रह्मज्य इति। ब्रह्मरूपोपपदाज्जिनाते डे डित्वसामर्थ्यादभस्यापि टेर्लोपे रूपम्। नच कप्रत्यये आकारलोपेनाऽपि रूपसिद्धौ डविधानं व्यर्थमिति वाच्यम्। तथा सति सम्प्रसारणे इयङादेशे च ब्रह्मजिय इत्यापत्तेः। नच कप्रत्ययेऽपि 'एरनेकाच' इति यणि रूपसिद्धौ डविधानं व्यर्थमेवेति वाच्यम्। अङ्गस्यैकाच्त्वेन ज्याधातोरेव प्रत्ययविधानेन विशिष्टादविधानेन च तदप्राप्तेः। नच कर्मण्यधिकारे अकर्मकाज्ज्याधातोः कथं डविधानमिति वाच्यम्। कविधौ सर्वत्रेति वचनसामर्थ्यात् ब्रह्मप्राप्तुं जिनातीत्यर्थाच्चाऽकर्मकादपि तस्माड्डविधानोपपत्तेः। वस्तुतस्तु अकर्मकेष्वपि सुपीत्यस्य सम्बन्धेन सुप्युपपदे धातोः प्रत्ययविधानेनाऽदोषादितिभावः॥

आह्व इति। नचाऽत्र केऽपि आलोपं बाधित्वा सम्प्रसारणे ततो (वार्णादि) ति न्यायेन पूर्वरूपत्वं बाधित्वा लोपे तस्याभीयासिद्धत्वेनोवङोऽप्राप्तौ यणि आह्व इति सिद्धौ डविधानं व्यर्थमिति वाच्यम्। आभीयासिद्धत्वानित्यत्वे वार्णादिति न्यायानित्यत्वे वाऽस्य ज्ञापकत्वात्। तेन जुहुवतुरिति सिद्धमिति भावः॥

अच्वौ किम् आढ्यीकुर्वन्त्यनेनेति। ननु अत्र ख्युनोऽभावेऽपि 'करणाधिकरणयोश्चे'त्यनेन ल्युट् स्यादत आह—प्रतिषेधसामर्थ्यादिति। आढ्यीकरणमिति रूपस्य ल्युट्ख्युनोस्तुल्यत्वम्। नच ख्युनि मुम्ह्रस्वौ स्यातामिति वाच्यम्। 'ऊर्यादिच्विडाचश्चे'ति निपातसंज्ञकत्वेन च्व्यन्तस्याऽव्ययत्वेन मुम्विधायकेऽनव्ययस्येति पर्युदासेन तदप्राप्तेः। नच ख्युनि 'उपपदमतिङि'ति नित्यसमासलाभो न ल्युटीति वाच्यम्। तत्रापि गतिसमाससम्भवेन तस्यापि नित्यसमासत्वात्। नच ङीबटाबभ्यामविशेष इति वाच्यम्। (नञस्नञी) ति वार्त्तिकेन ख्युन्यपि ङीपो विधानात्। नच स्वरे विशेष इति वाच्यम्। ल्युट्ख्युनोर्लिट्नित्स्वराभ्यां कृत् उदात्तत्वाऽविशेषादित्यलम्॥

भाष्यविरोधादुपेक्ष्यमिति। उक्तं हि भाष्ये सुपीति वर्तमाने पुनः सुब्ग्रहणं किमर्थम्, अनुपसर्ग इत्येव तदभूत्। इदं सुप्मात्रे यथा स्यात् उदासारिण्यः, प्रत्यासारिण्य इति॥

भाष्यकारवचनाच्छ्रीशब्दस्य ह्रस्वो नुमम्मोरभावश्चेति। अयम्भावः यथा प्रष्ठादिशब्दानां पुँयोगात्स्त्रियां वृत्तिः प्रष्ठी गणिकेति तथेह श्रीशब्दः परित्यक्तस्वलिङ्गः क्लीबः सन् कुले वर्तते। तत्र 'ह्रस्वो नपुसंके' ति ह्रस्वः। नच क्लीवत्वे नुमापत्तिरिति वाच्यम्। अपवादेनाऽमा तद्बाधात्। स्वमोर्नपुँसकादि त्यमो लुक्। नचैवमपि गां मन्य इत्यादावपि 'सुपो धात्वि' ति लुक् स्यादिति वाच्यम्। अभिधानसामर्थ्येनैव तद्बाधादिति प्राञ्चः। शेखरकृतस्तु, अत्र 'स्वमोरि'ति लुगन, बाध्यसामान्यचिन्तया 'सुपो धात्वि' ति लुग्वत् अस्यापि अम्विधिसामर्थ्येन बाधात्। किञ्च बहिरङ्गतयाऽपि नाऽमो लुक्। त्रिपाद्यां तदप्रवृत्तेः। तस्माच्छ्रियं मन्य इत्येव भाष्यसम्मतमित्याहुः॥

चतुर्विधोऽत्र नियम इति। अत्र सूत्रे श्रुतत्वात्पूर्वं ब्रह्मादय उद्देश्यास्ततोऽनन्तरं प्रकृतित्वाद्धन्तिः, ततः परिशेषाद्भूत इति क्विबिति सूत्रार्थः, तत्र विनिगमनाविरहेणाऽविशेषाच्चतुर्ष्वपि एवकारसम्बन्धः। तत्र ब्रह्मादिष्वेव भूतार्थाद्धन्तेरिति प्रकृतिनियमे हन्तेरुपपदान्तरसम्बन्धवृत्तिफलो धातुनियमः, ततश्च भूत इत्याश्रयणेन कालान्तरे उपपदान्तरेऽपि भवति पुरुषं हन्ति हनिष्यति वेत्यर्थे पुरुषहेति। ब्रह्मादिषु भूतार्थादेव हन्तेरिति प्रत्ययनियमे वर्तमानभविष्यत्कालयोः पूर्वप्रयोगसिद्धिः। ब्रह्मादिषु भूतार्थाद्धन्तेरेवेत्युपपदनियमे भूत इत्याश्रयणेन कालान्तरे धात्वन्तरादपि भवत्येव वृत्रं जयति जेष्यति वा वृत्रजित्। न वृत्रं जितवानिति भूते प्रयोगः। ब्रह्मादिषु भूतार्थाद्धन्तेः क्विबेवेतिकालनियमे पितृव्यं हतवान् पितृव्यघातीति भूतेऽपि प्रत्ययान्तरविशिष्टः प्रयोगः। ब्रह्मघातीति प्रयोगाभावो नियमफलं बोध्यम्। द्विविधो नियम इति भाष्यमिति। तथाच भाष्यमुभयतोऽयं नियमः ब्रह्मादिष्वेव क्विबेवेति च। युक्तञ्चैतत् श्रुत्योपस्थितोपपदप्रत्यययोरुपरोधापेक्षया प्रकरणलक्षणजघन्यप्रमाणोपस्थितधातुकालयोरेवोपरोधो न्याय्यः। एवञ्चैतद्भाष्यविरोधात्पूर्वोक्तमयुक्तमित्यलम्॥

ननु धृषधातोरकारेत्संज्ञकत्वेन 'विभाषाभावादिकर्मणोरि'ति विकल्पे प्राप्ते तदंशे नित्यार्थो विधिः स्यात् ततश्च भावादिकर्मभ्या- मन्यत्र वैयात्याऽभावेऽपि 'आदितश्चे'ति निषेध एव स्यादत आह— **भावादिकर्मणोस्तु वैयात्ये धृषिर्नास्तीति।** अनभिधाना दिति भावः। अत्र प्रमाणमाह--**अत एव नियमार्थमिति।** तेन भावादिकर्मभ्यामन्यत्र वैयात्याभावेऽपि न 'आदितश्चे'ति निषेधः। **हरदत्त इति।** अवैयात्ये भावादिकर्मणोरनभिधानाद्वैयात्ये च नियमादादित्वस्य साफल्यमस्त्येवेत्यभिप्रेत्याह--**माधवस्तु भावा- दिकर्मणोरवैयात्ये विकल्पमाहेति॥**

ननु 'द्वेचे'त्यनेन द्वित्वे कृतेऽपि प्रत्यासत्त्या षाष्ठद्वित्व एवाभ्या- ससंज्ञाप्रवृत्त्याऽऽष्टमिके तदप्रवृत्त्या सा न स्यादत आह-**द्विग्रह णादभ्याससंज्ञेति।**

## इति पूर्वकृदन्तप्रकरणम्

---

# अथोत्तरकृदन्तप्रकरणम्।

ननु उणादयो बहुलमित्यत्रत्यबहुलग्रहणस्याऽपरिपूर्णोणादिपरि- पूर्णार्थकस्य फलं प्रदर्शयति-**केचिदविहिता अपीति।** केचिदनु- क्ता अपि धातवः प्रत्ययाश्चोणादिषु ऊह्याः तर्कणीया इत्यर्थः। तथाहि, शङ्कुलेति प्रयोगदर्शनात् हृपेरुलजितिसूत्राद्विहित उलच्प्रत्ययः शकिधातोरपि भवतीति। किञ्च कुत्राप्यविहितयोः फिडफिड्डप्रत्यययोरर्तिः प्रकृतिरूह्यते तयोः कित्वञ्च प्रकल्प्यते। तथा षण्ढ इत्यत्र सत्वाभावश्चोह्यते।

ननु द्वन्द्वान्ते श्रूयमाणपदस्य प्रत्येकमभिसम्बन्धस्य प्रसिद्धत्वेन शकधृषेति सूत्रस्थार्थग्रहणस्य तत्सूत्रस्थपदेष्वन्वयः स्यादित्याशंक्य समाधत्ते-**अर्थग्रहणमस्तिनैव सम्बध्यत इति।** अनन्तरस्य विधिर्वाभवति प्रतिषेधो वेतिन्यायेनाऽनन्तरेणास्तिनैवार्थग्रहणस्य सम्बन्धो नतु शकादिभिरिति भावः।

पर्यायोपादानमर्थोपलक्षणार्थमिति। ननु कालशब्दोपादानादेव समयवेलाशब्दाभ्यामपि तुमुन्सिद्धौ पर्यायोपादानं व्यर्थमिति चेन्न। तस्याऽर्थोपलक्षणार्थत्वेन सार्थक्यात्। तथा च कालसमयवेलार्थेषूपपदेषु तुमुन्नित्यर्थेऽनेहाशब्दादपि तुमुन्सिद्धिः।

ननु सृस्थिर इति सूत्रेऽण्यन्तस्य सरतेरुपादानादतीसारो व्याधिरिति प्रयोगो नोपपद्येतेत्यत आह-अन्तर्भावितण्यर्थोऽत्र सरतिरिति। अतीसार इत्यत्रोपसर्गेकारस्य उपसर्गस्य घञ् मनुष्ये बहुलमित्यनेन दीर्घः।

ननु श्रमेरुदात्तोपदेशत्वान्मान्तत्वाच्च नोदात्तोपदेशस्य मान्तस्याऽनाचमेरिति वृद्धिनिषेधे विश्रम इति प्रयोगो न स्यादत आह-विश्राम इतित्वपाणिनीयमिति। श्रमेर्णिजन्तादच् विधाने तु विश्राम इति प्रयोगः साधुरेव भवितुमर्हति, अत एव धुर्यान्विश्रामयेति स इति रघुकाव्यपद्यसङ्गतिः। नच णिच्यपि वृद्धिनिषेधः स्यादिति वाच्यम्। नोदात्तोपदेशेत्यत्र कृतीत्यस्यानुवर्तनेन णिचि वृद्धिनिषेधाप्राप्तेः। मितां ह्रस्व इति ह्रस्वोऽपि नाशङ्क्यः। वेत्यनुवर्तनाद्व्यवस्थितविभाषाश्रयणेन ह्रस्वाभावात्। एवंचोक्तरीत्या प्रयोगस्य साधुत्वेऽप्यर्थभेदः स्यादेव। वस्तुतस्तु-निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजिति विवक्षायां न दोष इति भावः।

ननु श्रिणी भुवोऽनुपसर्गे इति सूत्रेऽनुपसर्गपदसत्त्वादनुपसर्गाद्भुवो घञो विधानादुपसर्गात्ततो घञोऽविधानात्प्रभाव इति प्रयोगो न स्यादित्यभिप्रेत्य शंकते-कथं प्रभावो राज्ञ इति। समाधत्ते—प्रकृष्टो भाव इति प्रादिसमास इति। अनुपसर्गाद्भुवो घञ्विधानेन भाव इति संसाध्य पश्चात्प्रशब्देन सह प्रादिसमासे प्रभाव इति प्रयोगोपपत्तिरिति भावः।

ननु श्रिणीभुव इति सूत्रेण नयतेर्घञि नाय इत्यस्य साधुत्वे नय इति न स्यात् तथा च वक्ष्यमाणप्रयोगो विरुध्यतेत्याह-कथं राज्ञो नय इति। समाधत्ते-बाहुलकादिति। सूत्रे बहुलग्रहणानुवृत्त्या घञो वैकल्पिकत्वेनोक्तप्रयोगसिद्धिरिति भावः।

इति ठक्कुरोपनामकश्रीकनकलालशर्म्मणः कृतौ फक्किकारत्न-मञ्जूषायां कारकादिकृदन्तान्तो द्वितीयः खण्डः समाप्तः ॥

---





विविधपुस्तकप्राप्तिस्थानम्—
हरिकृष्णदास, मालिक—"गुप्त-बुक-डिपो"
कचौरी गली, बनारस सिटी ।

